

तिरुमलतिरुपतिदेवस्थानानि

# श्रीनिवासमङ्गापुरस्थ श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

२०२२ फिब्रवरी १९ तः २८ पर्यन्तम्



**१९-०२-२०२२ मन्दवासरः**

प्रातः - ............

रात्रौ - सेनाधिपत्युत्सवः, अङ्कुरार्पणम्

**२०-०२-२०२२ भानुवासरः**

प्रातः - तिरुच्चि उत्सवः, ध्वजारोहणम्

रात्रौ - महाशेषवाहनम्

**२१-०२-२०२२ इन्दुवासरः**

प्रातः - लघुशेषवाहनम्

रात्रौ - हंसवाहनम्

**२२-०२-२०२२ भौमवासरः**

प्रातः - सिंहवाहनम्

रात्रौ - मौक्तिकमण्टपवाहनम्

**२३-०२-२०२२ सौम्यवासरः**

प्रातः - कल्पवृक्षवाहनम्

रात्रौ - सर्वभूपालवाहनम्

**२४-०२-२०२२ बृहस्पतिवासरः**

प्रातः - आन्दोलिकायां मोहिन्यवतारः

रात्रौ - गरुडवाहनम्

**२५-०२-२०२२ भृगुवासरः**

प्रातः - हनुमद्वाहनम्,

सायं - वसन्तोत्सवः

रात्रौ - गजवाहनम्

**२६-०२-२०२२ मन्दवासरः**

प्रातः - सूर्यप्रभवाहनम्

रात्रौ - चन्द्रप्रभवाहनम्

**२७-०२-२०२२ भानुवासरः**

प्रातः - रथोत्सवः

रात्रौ - अश्ववाहनम्

**२८-०२-२०२२, इन्दुवासरः**

प्रातः - पल्यङ्कोत्सवः, तिरुच्चि उत्सवः, तीर्थावभृतस्नानोत्सवः, चक्रस्नानम्

रात्रौ - तिरुच्चि उत्सवः, ध्वजावरोहणम्



## गीतामृतम्

येषामर्थे काङ्क्षितं नो राज्यं भोगास्सुखानि च।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।। (भगवद्गीता ३२/१)
आचार्याः पितरः पुत्राः तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालास्सम्बन्धिनस्तथा ।। (भगवद्गीता ३३/१)

अर्जुनः श्रीकृष्णं प्रति वदति, ''हे कृष्ण! येषाम् आचार्यादीनां संरक्षणार्थम् अस्माभिः राज्यं स्रक्चन्दनादयः सुखानि च अपेक्षितानि, ते आचार्यादयः प्राणानां धनानां च त्यागम् अङ्गीकृत्य युद्धार्थं वर्तमानाः सन्तः दृश्यन्ते। अतः राज्यसुखादिभिः किं वा प्रयोजनम्'' इति।

## सङ्कीर्तनम्

परमपुरुष हरि परमपरात्पर
परिपुभञ्जनपरिपूर्ण नमो ।।परम।।
कमलापति कमलनाभ कमलासनवन्द्य
कमलहितानन्तकोटिघनसमुदयतेजा
कमलामलपत्रनेत्र कमलवैरिवर्णगात्र
मलषट्कयोगीश्वर हृदयं तेहं नमो नमो। ।।परम।।
जलनिधिमथन जलनिधिबन्धन जलधिमध्यशयना
जलधियन्तविहार मच्चकच्चपयवतारा
जलनिधिजामात जलनिधिशोषण जलनिधिसप्तकगमन
जलनिधिकारुण्य नमो तेहं जलनिधिगम्भीर नमो नमो।।परम।।
नगधर नगरिपु नन्दित नगचरयूथपनाथा
नगपारिजात हर सारस पन्नगपति राजशयन
नगकुलविजय श्रीवेङ्कटनगनायक भक्तविधेया
नगधीराहं ते सर्वेश्वर नारायण नमो नमो ।।परम।।

(अन्नमाचार्यसङ्कीर्तनम्)



संपादकीयम्

# रथारूढो रविः

सामान्यजनाः रविं नक्षत्रत्वेन गणयन्ति। परन्तु सः ज्जोतिषशास्त्रदृष्ट्या कश्चन ग्रहः इति निर्दिश्यते। वियदीयपदार्थेषु सूर्यः अत्यन्तं प्रमुखः। सूर्यस्याधारेणैव शिष्टग्रहाः चरन्ति। नित्यजीवनव्यवहारे अस्य प्रभावः अनन्यसाधारणः। अत एव कालपुरुषस्याङ्गत्वेन ग्रहाणां वर्णने 'कालात्मा च दिवानाथः मनः कुमुदबान्धवः'' इति कालपुरुषस्यात्मत्वेन वर्णितः। अतः विना सूर्येण जीवनस्य कल्पना न शक्या एव।

किञ्च वैदिकदृष्ट्या कश्यपप्रजापत्यदित्योः पुत्रः भगवान् सूर्यः। अत एवादित्य इति प्रसिद्धः। तस्यैव नामान्तराणि सन्ति ''सूरः, सूर्यः, अर्यमा, आदित्यः, द्वादशात्मा, दिवाकरः, भास्करः'' इत्यादीनि। तत्र ''नित्यं सरतीति सूरः, सुवति प्रेरयति व्यपारेषु सर्वानिति सूर्यः'' इत्यादिव्युत्पत्त्या प्रत्येकं नामापि उत्कृष्टार्थगर्भितं सत् तस्य वैशिष्ट्यं ज्ञापयति।

ऋग्वेदे ''महासौरम्'' इति नाम्ना कश्चन सूर्यस्तवः श्रूयते। तस्य पठनपारायणादिना निखिलरोगोपशमः भवतीति ब्रुवन्ति महान्तः बुधाः।

''आरोग्यं भास्करादिच्छेत् श्रियमिच्छेद्धुताशनात्'' इति उक्तिमनुसृत्य ''प्रस्कण्वमहर्षिः'' स्वीयत्वग्दोषनिवारणाय महासौरस्थेन ''उद्यन्नद्यमित्रमह'' इति मन्त्रेण भगवन्तं ध्यात्वा प्रपूज्य तद्दोषं परिहृत्य सुखेनाजीवदिति स्मृतिभिरवगम्यते खलु!

शौनकमहर्षिरपि, उद्यन्नद्येति मन्त्रोऽयं सौरः पापप्रणाशनः।
रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः।। इति उक्तवान्।

विष्णुसहस्रनामपठनेन यत् पुण्यं प्राप्यते। तत् सहस्रनामपठने अशक्तैः केवलं ''श्रीराम राम रामेति रमे रामे मनोरमे। सहस्रनाम तत्तुल्यं रामनाम वरानने'' इति श्लोकपठनेन लभ्यते खलु! तद्वत् महासौरपठने अशक्ताः केवलं ''उद्यन्नद्यमित्रमह आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य हरिमाणं च नाशय'' इति मन्त्रपठनेन महासौरपठनफलमाप्नुवन्ति।

माघमासस्य शुक्लसप्तमी तिथिः 'रथसप्तमी' नाम पर्व। तदा रथारूढं भगवन्तं सूर्यं भक्त्या पूजयामः चेत् अक्षय्यं फलमवाप्नुमः। एतद्दिनं ''अचला सप्तमी'' इत्यपि कथ्यते।

सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी।
अचला सप्तमी दुर्गा शिवरात्रिर्महाभरः।।

इत्युक्तदिशा ग्रहणकालाचरितदानादिपुण्यम् अस्मिन्नपि पर्वणि क्रियमाणदानादिना लभ्यते इत्यवगम्यते। अरुणोदयवेलायां अर्कपत्रैः सह स्नानं तु अमितपुण्यप्रदम्।

अतः अस्मिन् पर्वणि वयं समेऽपि प्रतिवर्षमिव तिरुमलक्षेत्रे आचरिष्यमाणे विशिष्टे रथोत्सवे भागं गृहीत्वा महासौर-आदित्यहृदयादिस्तुतीनां पारायणं कृत्वा द्वादशादित्यान् तथा तदन्तर्गतम् अखिलाण्डकोटिब्रह्माण्डनायकम् अनवरतं स्मरन्तः सत्कार्यमग्नाः भगवत्कृपाछत्राश्रिता उत्तमारोग्यवन्तश्च भवाम।

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-११

# फिब्रवरि २०२२

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



श्री प्लवनामसंवत्सरस्य पुष्यकृष्णामावास्या तः माघकृष्णत्रयोदशीपर्यन्तम् - ११४३



## सप्तगिरिः

गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् - सूर्यप्रभवाहने श्रीवेङ्कटेश्वरः, तिरुमल
अन्तिमरक्षापुटः - श्रीभूसमेतश्रीकल्याणवेङ्कटेश्वरः, श्रीनिवासमङ्गापुरम्

**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसम्पादकः*

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# भीष्मैकादशी

- श्री मङ्गिपूडि कामेश्वररावः, चरवाणी - ९९८९०१३०२०

भीष्मनामस्मरणेन एव अस्माकं जातिः, भरतखण्डः, कर्मभूमिः, पुण्यभूमिः च इयं भारतावनिः, भक्तकोटिः च आनन्दतरङ्गितः भवति सर्वदा। कुत इति चेत् असौ शन्तनुपुत्रः देवव्रतः स्वजीवितं सर्वम् त्यागसमर्पणभावेन एव यापितवान्। धन्योऽयम्।

असौ तु भीष्मपितामहः महाभारतयुद्धस्य सर्वस्य सर्वप्रथमः सेनाध्यक्षः। महान् योद्धा। कुरुवंशमहावृक्षस्य मूलभागः। सर्वसम्पूज्यः, महामेरुनगसमः, धीरोदात्तः च कौरवपाण्डवानां पितामहः, पथप्रदर्शकः, महान् योगी च। अस्य वास्तवं नाम देवव्रतः। एषः भीष्मः अष्टवसुषु एकः। अपि च गङ्गा-शन्तन्वोः पुत्रः, गाङ्गेयः इति सुप्रसिद्धः च ।

असौ महान् योद्धा परशुरामस्य प्रियशिष्यः। धनुर्विद्यायाम् अग्रेसरः महापराक्रमशाली वीर्यवान् च। असौ दैवव्रतः बाल्यात् एव सर्वान् वेदान्, पुरणानि उपनिषदश्च विद्वद्भ्यः अभ्यस्तवान्। स्वपितुः शन्तनोः सकाशात् - धर्म शास्त्रं न्यायशास्त्रं च अधीतवान्।

असौ देवव्रतः कथं भीष्मः अभूत् इति विषये एका प्रसिद्धा कथा अस्ति। एकदा देवव्रतस्य पिता शन्तनुः मृगयार्थम् अटवीं गत्वा तत्र एकां सुन्दरीं युवतिं दृष्ट्वा, मोहितः भूत्वा, तस्याः नाम सत्यवती इति ज्ञात्वा, तस्याः पिता दाशराजः इति ज्ञात्वा च तां परिणेतुम् ऐच्छत् । परन्तु तस्याः पिता तु 'मम पुत्रिकायाः सुतः एव तव राज्यस्य राजा भवेत्' इति नियमं विधिरूपेण उक्तवान्। परन्तु राजा शन्तनुः स्वपुत्राय देवव्रताय अन्याय्यं कर्तुं नैच्छत्। ततः प्रत्यागत्य विचारमनस्कः भूत्वा अतिष्ठत्। पितुः स्थितिं वीक्ष्य तस्य सारथिद्वारा सर्वम् अवगत्य देवव्रतः झटिति सत्यवत्याः गृहं गत्वा तस्याः पितरं मिलित्वा स्वस्य सम्पूर्णं राज्यं तस्याः पुत्राय एव दास्यामि इति उक्त्वा, विवाहितो नैव भविष्यामि इति भीषणप्रतिज्ञां विधाय 'भीष्मः' इति नाम्ना प्रथां प्राप। स्वपितुः सुखसन्तोषप्राप्त्यर्थं स्वजीवितस्य त्यागं कृतवान्। अनन्तरकाले असौ महान् योद्धा महाभारतयुद्धसमये अनिष्टपूर्वकम् एव कौरवपक्षतः घोरं युद्धं कृत्वा (दशदिनानि) शिखण्डिकारणात् अपि च पाण्डवेभ्यः उपकारं कर्तुं धर्मरक्षकेभ्यः पाण्डवेभ्यः धर्मं साधयितुं धर्मपक्षपाती भूत्वा अस्त्रसंन्यासं कृत्वा शरशय्यां प्राप्तवान्। यदा सत्यव्रतः स्वपितुः कृते स्वजीवितं त्यागं कृतवान् तदा शन्तनुः तस्मै ''स्वेच्छामरणी भव इति'' वरम् अदात्। तदनुसृत्य भीष्मः उत्तरायणपुण्यकालपर्यन्तं निरीक्ष्य माघशुक्ल एकादश्यां विष्णुसहस्रनामानि धर्मराजाय प्रबोध्य नारायणैक्यं प्राप्तवान्। जीवनपर्यन्तं ब्रह्मचर्यं परिपाल्य श्रीकृष्णं ध्यायन् पाण्डवानां हितैषी भूत्वा स्ववंशप्रतिष्ठां प्राचोदयत्। सर्वेषां भरतखण्डवासिनां मनांसि आह्लादयन् विष्णुसहस्रनामद्वारा भक्तकोटीनां मनस्सु ध्रुवस्थानं सम्पादितवान्।

# मध्वाचार्याः

कलियुगे प्रबलाज्ञानान्धकारनिवृत्त्यै श्रीमुख्यप्राण एव रजतपीठपुरनिकटे विद्यमाने पाजकक्षेत्रे वेदवतीमध्यगेहभट्टदम्पत्योः कुमारत्वेन त्रयोदशशतके अजायत। तस्य नाम तु वासुदेव इति। साम्प्रदायिकाः भणन्ति यत् मुख्यप्राणस्यैव अवताराः हनुमद्-भीम-मध्वाचार्याः इति। स च बाल्यदेव मेधाशक्त्युज्ज्वलितः आसीत्। स एव वासुदेवः अच्युतप्रेक्षाचार्येण संन्यासं स्वीकृत्य **आनन्दतीर्थेति** नाम्ना प्रसिद्धिं प्राप।

एकादशे वयसि वासुदेवपण्डितनामानं महान्तं वादाय रजतपीठपुरमागतं वादे पराजित्य तथैव वादिसिंहेन सहागतं बौद्धपण्डितं बुद्धिसागरं निरुत्तरं कृत्वा स्वगुर्वाद्यानन्ददायी सन् स्वनामचारितार्थ्यं प्रादर्शयत्। पुनः क्वचित् विष्णुसहस्रनामस्तोत्रस्यैकैकस्य पदस्यापि सहस्रम् आर्थान् विविच्य तस्य बुद्धिवैषद्यं प्रदर्श्य **पूर्णप्रज्ञ** इति प्रथामवाप। एवं समस्तभारते सञ्चरन् **हरिः एव सर्वोत्तमः** इति आघोषयत्। एतदेव मुख्योद्देश्यम् अस्य श्रीमतः आसीत्। तस्य वेदोक्तनामास्ति **मध्वः** इति। ''मध्वो वा नाम मारुतं यजत्राः प्र यज्ञेषु शवसा मदन्ति'' इति श्रुतम्।

स च मध्वाचार्यः दक्षिणभारते पर्यटनानन्तरं रजतपीठपुरे गीताभाष्यम् आरचयत्। ज्ञानिसिंहोऽयं ''गीताभाष्यं चकारासौ प्रथमं तुष्टिदं हरेः'' इति व्यासतीर्थीयग्रन्थमालिकास्तोत्रे उक्तदिशा भगवतः प्रीत्यै प्रप्रथमं गीताभष्यं ग्रथयित्वा व्यासाय समार्पयत्।

तत्र मङ्गलपद्ये -

**देवं नारायणं नत्वा सर्वदोषविवर्जितम्।**
**परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि शक्तितः।।**

इत्यत्र श्रीवेदव्यासः भाष्यं दृष्ट्वा श्रीमदाचार्यं प्रति भवतः अगाधज्ञानसागरे लवमात्रांशोपयोगेन लिखितमेतद्भाष्यमित्यतः **शक्तितः** इति पदं त्यक्त्वा **लेशतः** इति पदसंयोजनमुचितमिति उक्त्वा आचार्यस्य सर्वज्ञतां संसूचयामास।

तदनु एते ब्रह्मसूत्रभाष्यं, दशोपनिषद्भाष्यं, वेदानाम् आध्यात्ममुखदर्शनार्थं ऋग्वेदसंहितायाः चत्वारिंशत्संख्यानां सूक्तानां भाष्यम्, पुराणग्रन्थानां मौलिकतादर्शनाय भागवततात्पर्यं, श्रीमन्महाभारततात्पर्यनिर्णयः तथा दशप्रकरणानि, सदाचारस्मृतिः, कन्दुकस्तुतिः इत्यादिग्रन्थान् तत्त्वसाराय 'सप्तत्रिंशदमन्दधीः' इत्युक्तदिशा सप्तत्रिंशत् संख्याकान् आरचयन्। ते च कुरुक्षेत्रे भूम्यन्तर्गतभीमसेनगदां प्रदर्श्य स्ववाय्वंशत्वं समर्थितवन्तः। एकदा बदरीयात्रातः निर्गमनवेलायां गोदावरीनदीतीरस्थे तीर्थक्षेत्रे एकस्मिन् शोभनभट्टनामकः एकः प्रकाण्डपण्डितः आचार्येण पराभवं प्राप्य तच्छिष्यवृत्तिं स्वीकृत्य **पद्मनाभतीर्थेति** नाम्ना नैकेषां मध्वशास्त्रप्रसारकेन्द्राणां परम्पराकारणमभवत्। सैव मध्वतन्त्रप्रसारे अतिप्रमुखपात्रं निरवहत्। किञ्च पश्चिमसमुद्रे लब्धां श्रीकृष्णप्रतिमां उडुपिपुरे प्रतिष्ठाप्य अष्टौ मठान् स्थापयित्वा अष्टौ शिष्यान् पर्यायक्रमेण तदर्चनार्थं स्वमतप्रचारसारार्थं च नियमितवन्तः श्रीमदाचार्याः। एतादृशैः महाकार्यादिभिः स्वजीवनोद्देश्यं समाप्य शिष्यान् स्वकार्ये सिद्धान्तप्रचारे नियोज्य 'पिङ्गल'नामकस्य संवत्सरस्य माघशुद्धनवम्यां तिथौ व्यासबदरीं निरगमन्निति आचार्याणां सङ्क्षेपपरिचयः विहङ्गवीक्षणेन।



- श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

## सङ्गीतशास्त्रम्

**प्रा**चीनकालात् आरभ्य भारते धर्मादि चतुर्विधपुरुषार्थसिद्ध्यर्थं बहूनि शास्त्राणि प्रवृत्तानि प्रवर्तन्ते च । तेषु सङ्गीतशास्त्रमपि सङ्गच्छते। पुरुषार्थप्राप्त्यै सङ्गीतम् अद्वितीयं साधनमिति शास्त्रान्तरेष्वपि निर्दिष्टम् यथा-

**ब्राह्मणौ वीणागाथिनौ गायत (तै.ब्रा.३-९-१४)**

एवं,

**वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।**
**तालज्ञश्चाप्रयासेन मोक्षमार्गे च गच्छति।।** इति।

(याज्ञवल्क्यस्मृतिः ३-४-११५)

चतुर्विधपुरुषार्थसिद्ध्यर्थं सङ्गीतमिव रमणीयं शास्त्रमन्यत् नास्तीति सुदृढं तथ्यम्।

## कर्णाटकसङ्गीतविकासः

भारतीयसङ्गीतस्य प्रमुखत्वेन हिन्दुस्तानी कर्णाटकेति द्वौ भेदौ। तयोः कर्णाटकसङ्गीतस्य विकासः सामवेदादभवत्।





# सङ्गीतसुधाकरः पुरन्दरदासः


- कुमारी.यदुश्री के.पि.
चरवाणी - ९४४६५९३२८३


सामवेदात्परं भरतकृतनाट्यशास्त्रमेव कर्णाटकसङ्गीतस्य आधारग्रन्थत्वेन स्वीक्रियते। तदनु **मातङ्गकृतबृहद्देशी, नान्यदेवकृतसरस्वतीहृदयालङ्कारः, हरिपालस्य सङ्गीतसुधाकरः, शारङ्गदेवस्य सङ्गीतरत्नाकरः** इत्यादयः ग्रन्थाः दाक्षिणात्यसङ्गीतस्य विकासे प्रधानभूताः सन्ति।

## वाग्गेयकारपञ्चकम्

दाक्षिणात्यसङ्गीतविकासे बहवः आचार्याः योगदानं कृतवन्तः। तेषु वाग्गेयकारपञ्चकनाम्ना प्रसिद्धाः **पुरन्दरदासः, त्यागराजस्वामी, मुत्तुस्वामिदीक्षितः, श्यामशास्त्री, स्वातितिरुनाल्** एते आचार्याः। एते दाक्षिणात्यसङ्गीतनभसि उत्तमवाग्गेयकाराः इति चिरं प्रतिष्ठिताः सन्ति। अस्मिन् त्यागराजस्वामि-मुत्तस्वामिदीक्षित-श्यामशास्त्रिणः च सङ्गीतशास्त्रे त्रिमूर्त्तयः इति प्रसिद्धाः। एवं **पुरन्दरदासः कर्णाटकसङ्गीतस्य पितामहः** इति परिगण्यते।

## पुरन्दरदासः

दाक्षिणात्यसङ्गीतस्य अद्यतने दृश्यमानघटनाविष्कारः पुरन्दरदासेन निश्चितः। तस्य महता प्रयासेन कर्णाटकसङ्गीताध्ययने प्रयोगे च अत्यन्तसुलभता आगता। तस्य प्रशंसनीयार्हमिदं कर्म **कर्णाटकसङ्गीतपितामह** इति नामप्रदाने कारणमभवत्।

## जीवनम्

पुरन्दरदासनामककविश्रेष्ठस्य जन्म कर्णाटकदेशस्य शिवमोग्गायां क्षेमापुरे (तीर्थहल्ली) १४८४ तमे वर्षे अभवत्। पुरन्दरदासस्य पूर्वनाम **'श्रीनिवासनायक'** इति। एतस्य पिता वरदप्पनायकः स्वदेशे धनिकः व्यापारी आसीत्। बाल्ये एव सः श्रीनिवासनायकः संस्कृतं तथा कन्नडभाषां च सम्यगधीतवान्। पित्रा साकं व्यापारकार्ये श्रीनिवासोऽपि सहकारं कुर्वन् जीवनमकरोत्।

एकदा निर्धनब्राह्मणः एकः स्वपुत्रस्य उपनयनकरणार्थं धनं प्रार्थयन् श्रीनिवासगृहमागतवान्। श्रीनिवासपत्नी सरस्वती स्वस्याङ्गुलीयकमेकं तस्मै प्रादात्। भर्तुः कृते इदं वक्तुं भीतिवशात् सा दैवभजनं कृतवती, ततः नूतनाङ्गुलीयकमेकं प्राप्तवती च। कालान्तरे इदं ज्ञात्वा श्रीनिवासः दानस्य स्वजीवनस्य च महिमानम् अवगम्य स्वजीवने यावतीं सम्पदम् आर्जितवान् तत्सर्वम् निर्धनेभ्यः



समर्पितवान्। तदनु सः हरिभजने निरतः सन् भक्तिपूरितकाव्यानि विलिखन् देशाटनमग्नः अभूत्।

तस्मिन् काले कर्णाटकदेशे विजयनगरसाम्राज्यस्य राजा सांस्कृतिक-धार्मिक-सामाजिकेत्यादिषु सर्वेषु क्षेत्रेष्वपि विकासार्थं कृतभूरिपरिश्रमः कृष्णदेवरायः आसीत्। श्रीनिवासः सञ्चारकाले विजयनगरम् आगत्य तत्र भक्तिमयवातावरणेन सन्तुष्टो भूत्वा तत्रैव वस्तुं निश्चितवान्। तत्र व्यासतीर्थस्य शिष्यत्वमपि स्वीकृतवान्। व्यासगुरुरेव श्रीनिवासाय **पुरन्दर** इति नामप्रदानं कृतवान्। पश्चात् पुरन्दरः दीक्षितसम्प्रदायस्य दासत्वं स्वीकृत्य भारते तस्य आध्यात्मिकप्रचारमपि चकार। महतः अस्य जन्म नारदमुनेः अवतारत्वेनेत्यपि विश्वसन्ति सम्प्रदायविदः।

कन्नडभाषायां तथा संस्कृतभाषायां च भक्तिपरककाव्यानि तथा अन्यकाव्यानि च कृत्वा सः कर्णाटकसङ्गीतसाहित्यस्य प्रौढतां वर्धयामास। महतः अस्य देहवियोगः १५६४ तमे वर्षे हम्पीदेशे एकस्मिन् मण्डपे अभवत्। तच्च स्थानं **पुरन्दरदासमण्डपम्** इति अधुनापि तत्र भासते।

### कर्णाटकसङ्गीते पुरन्दरदासस्य सम्भावना

कर्णाटकसङ्गीतस्य अतिविस्तृतगानप्रपञ्च एवासीत् पुरन्दरदासः। भक्तिः, प्रतिभा, कविताकौशलं च समप्रधानभावेन दृश्यन्ते तस्य काव्येषु। आध्यात्मिकपरकांशानाम् आधिक्येन तस्य कृतयः **पुरन्दरोपनिषत्** इत्यपि नाम्ना कीर्तिं गताः।

**सकलग्रहफल नीने....., भाग्यद लक्ष्मी बारम्मा...., शरणु सिद्धिविनायक...., बारो नम्म मनेगे गोपालकृष्ण.....** इत्येताः कृतयः तस्य भक्तिनिर्भरकृतिषु प्रमुखाः सन्ति। एवं तस्य कृतिषु बहुत्र पुरन्दरविठलन इति प्रयोगं द्रष्टुं शक्नुमः।

अत एव **पुरन्दरविठलन** इति प्रयोगः पुरन्दरकाव्यानां विशेषमुद्रात्वेन स्वीक्रियते। तस्य रचनाः सर्वाः अपि संस्कृते तथा कन्नडभाषायां च विद्यन्ते। साहित्यदृष्ट्यापि तस्य कृतयः उत्कृष्टाः दृश्यन्ते।

कर्णाटकसङ्गीतस्य अद्य दृश्यमानघटनायाः आविष्कारः, समीकरणं च पुरन्दरेणैव कृतम्। स एव कर्णाटकसङ्गीताभ्यासार्थं बालपाठान् **मायामालवगौला** इत्यस्मिन् रागे निबबन्ध। तदनुगुणं तेनैव **सप्तस्वर-सरलि-जण्ड-तारस्थायी-मन्द्रस्थायी-धाटु-अलङ्कारादिप्रथमसङ्गीतपाठानां** क्रमीकरणं मायामालवगौलायां कृतम्।

कण्ठसाधकार्थं शरीरशुद्ध्यर्थं तालबोधार्थं च वरिशादीनाम् अलङ्कराणां च क्रमीकरणं तेन बहु सुष्ठु कृतम्। इतोऽपि तेन **ध्रुवमठ्यादि**सप्ततालानां तथा **चतुरश्र-तिश्रादिपञ्चजातीनाम्** अपि क्रमीकरणं कृतम्। अद्यापि स एव क्रमः कर्णाटकसङ्गीताभ्यासे बालपाठत्वेन उपयुज्यते। **पिल्लारिगीतानि** इति प्रसिद्धानां गीतानां सर्जनमपि तस्मिन्नेव रागे तेन कृतम्। तदतिरिच्य **लक्षणगीततानवर्ण-तिल्लाना-पद-देवनामवर्णन**परकाण्यनेकानि गीतानि तेन विरचितानि। तेन प्रायः ८० रागाणां प्रयोगः कृतः। एवम् आहत्य एषः ४,७५,००० कृतीः विरचितवानिति पण्डितानामभिमतम्। परन्तु तेषु केवलम् ५००० इदानीमुपलभ्यन्ते।

एवं पुरन्दरदासः कर्णाटकसङ्गीतस्य समग्रविकासे महद्योगदानं कृतवान्। तथैव कर्णाटकहरिदासपरम्परायाश्च मूलप्रवर्तकः असौ इत्यपि निखिलजनविदितविषय एव। एषः महान् पुरुषः पुष्यबहुलामावास्यायां तिथौ हरिपादमवाप। तद्दिनं पुरस्कृत्य पुरन्दरदासस्य आराधनामहोत्सवः अद्यापि लोके बहुत्र अत्यन्तं वैभवेन आचर्यते। प्रत्यहं तस्य स्मरणेन वयमपि भक्तिवैराग्यलेशभाजः भवेम।

**मन्मनोभीष्टवरदं सर्वाभीष्टफलप्रदम्।**
**पुरन्दरगुरुं वन्दे दासश्रेष्ठं दयानिधिम्॥**
**ज्ञानवैराग्यसम्पन्नं भक्तिमार्गप्रवर्तकम्।**
**पुरन्दरगुरुं वन्दे दासश्रेष्ठं दयानिधिम्॥**

# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः
## (विजयदासकृतिषु)

तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा॥ गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



(तदनन्तरम्)

**भ**क्तैः भक्त्या भगवते श्रीनिवासाय क्रियमाणसेवासु अन्यतमा सेवा सोपानोत्सवसेवा(मेट्लोत्सवः)। इयं सेवा सुप्रसिद्धा वर्तते। सोपानोत्सवक्रममनुसृत्य तिरुमलक्षेत्रं प्रति गतवन्तः भक्ताः सम्प्रदायानुसारं कथं श्रीनिवासं पश्येयुः इति दासवर्याः एकस्मिन् सुलादिकीर्तने एवं प्रकारेण अकथयन्।

गिरिय तप्पलल्लि मेरेव कपिलतीर्थ।
एरडोंभत्तु तीर्थ निरुतवासवुंटु।
नररुमिंदु गोतुरगळ उद्धरिसि।
हिरिदागि धात्रि सुरतृप्तिय पडिसि।
परमहरुषदलिगिरिय सोपानव।
भरदिंदलेरुत एरडैवत्तु मेट्लु।
परिमीरदे कुळितु हरिकथाश्रवणव।
तिरुवेंगळेशन चरिते कोंडाडुत्त।
बरुत नरसिंहन दरुशन कैकोंडु।
तेरळि गुडिगोपुर शिखरवन्ने कंडु। निं
-दिरदे प्रदक्षिणे तिरुगि गुडि पोळियल्लि।
धर वरहदंवगे गरगि पुष्करणिगे।
सरसदल्लि नमिसि परिशुद्धनगि,
देव द्वारवन्ने पोक्कु गरुडगंभद बळियल्लि
परिठविसि पूर्वोत्तर पूजियन्नु तिळिदुश्री।
हरियचिंतिसि अल्लि मरुतांतर्गत नेंदु
परमात्म नाद सुन्दर श्रीनिवासन्न।
निरीक्षिसि तन्नोळगिरतक्क मूर्तिय
अरिदु आतन गुणोत्कर्षणेयनु माडि।
रुमरिसलु बेग दुस्तरवन्नु दाटि सुव।
परम मंगल रूप विजय विठल तिम्म।
करेदरे करविडिदु करेदोय्व मुकुतिगे।।

(अस्मिन् तिरुमलपर्वते विद्यमानानां वृक्षपत्राणाम् अधः विद्यमाने कपिलतीर्थे अनेकानि तीर्थानि सन्ति। तत्रस्थ तीर्थेषु नराः सङ्कल्पपूर्वकं स्नानमाचर्य, ब्राह्मणेभ्यः दानं प्रदाय, तदनु भक्ति-श्रद्धा-उत्साहैः तिरुमलक्षेत्रं प्रति आगच्छेयुः। तत् कथम् इत्युक्तौ प्रत्येकं शतसोपानारोहणानन्तरं तत्र उपविश्य हरिकथाश्रवणं भगवतः श्रीनिवासस्य संस्तवनपुरस्सरं करणीयम्। तदनन्तरं मार्गे नरसिंहस्वामिनः दर्शनं कृत्वा, आलयगोपुरशिखरं दृष्ट्वा, आलयप्रदक्षिणं कृत्वा, धरासहितवराहस्वामिनं नमस्कृत्य तदनु पुष्करिण्यां च स्नात्वा परिशुद्धाः भूत्वा महाद्वारं प्रविश्य तत्रस्थगरुडस्तम्भस्य समीपे दण्डायमानाः भूत्वा श्रीहरिं चिन्तयित्वा, मरुदन्तर्गताय परमात्मने सुन्दरश्रीनिवासाय निरीक्षणं कृत्वा अन्तरङ्गे विद्यमानं भगवन्तं ज्ञात्वा तं स्वामिनं स्मरामः चेत् भगवान् श्रीनिवासः अस्मान् दुस्तरं भवाब्धिं प्लावयति। अपि च अस्माकं कृते कैवल्यम् अनुगृह्णाति। अपि च तिरुमलक्षेत्रे स्वामिपुष्करिण्यां स्नात्वा अरिषड्वर्गापनयने समर्थानां सालाग्रामाणां दानं सुवर्णरजतानाञ्च दानं क्रियते चेत् महापुण्यफलम् भवतीति कथयन्ति।

(अनुवर्तिष्यते)



## तिरुपतिस्थ
## श्रीगोविन्दराजस्वामिनः
# प्लवोत्सवः
(१०-०२-२०२२ तः १६-०२-२०२२)

# द्वादशादित्याः

## धाता - चैत्रः



धाता शुभस्य मे दाता
भूयो भयोऽपि भूयसः।

## अर्यमा - वैशाखः



अर्यमा तु सदा भूत्यै
भूयस्यै प्रणतस्य मे।

## मित्रः - ज्येष्ठः



मित्रोऽस्तु मम मोदाय
तमस्तोमविनाशनः।

## त्वष्टा - आश्वयुजः



त्वष्टा शुभाय मे भूयात्
शिष्टावलिनिषेवितः।

## विष्णुः - कार्तिकः



गायत्रीप्रतिपाद्यं तं
विष्णुं भक्त्या नमाम्यहम्।

## अंशुमान् - मार्गशिरः



मुनीन्द्रनिवहस्तुत्यो
भूतिदोऽस्त्वंशुर्भवेन्मम।

# द्वादशादित्याः

## वरुणः - आषाढः



वरुणो धवलो जिष्णुः
पुरुषो निम्नगाधिपः।

## इन्द्रः - श्रावणः



सहस्त्ररश्मिसंवीतम्
इन्द्रं वरदमाश्रये।

## विवस्वान् - भाद्रपदः



नभोग्रहमहादीपं
विवस्वन्तं नमाम्यहम्।

## भगः - पुष्यः



घटिकानां च यः कर्ता
भगो भाग्यप्रदोऽस्तु मे।

## पूषा - माघः



पूषा तोषाय मे भूयात्
सर्वपापापनोदनात्।

## पर्जन्यः - फाल्गुणः



जगदानन्दजनकः
पर्जन्यः पूज्यते मया।

# तिरुमलतिरुपतिदेवस्थानानि



तिरुमलक्षेत्रस्थे वसन्तमण्डपे ०२-१२-२०२१ दिनाङ्के कार्तिकमासे विशेषतः आचरिता धन्वन्तरिपूजा



१५-१२-२०२१ तः १९-१२-२०२१ पर्यन्तं तिरुपति श्री कपिलेश्वरस्वामिनः आलये (एकान्ततया) आचरितप्लवोत्सवे पूजादृश्यम्।





११-१२-२०२१ दिनाङ्के अलिपिरिस्थायाः सप्तगोप्रदक्षिणशालायाः वीक्षणे कञ्चि कामकोटिपीठाधीशाः श्री श्री श्री विजयेन्द्रसरस्वती स्वामिनः। तत्र च ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि, ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मारेड्डि, ऐ.डि.इ.यस्., पालकमण्डलिसभ्याः, तुडा चैर्मन् डा॥ चेविरेड्डि भास्कर रेड्डि, तदितरमहाशयाः अधिकारिणश्च।



दि.१६-१२-२०२१, श्रीपद्मावती चिन्नपिल्लल (बालकानां) हृदयचिकित्सालये "अड्वान्सड् क्याथ् ल्याब्" प्रारम्भोत्सवे ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि महाभागाः। तत्र च ति.ति.दे. तिरुपति सहकार्यनिर्वहणाधिकारिणः श्री वीरब्रह्मम्, ऐ.ए.एस्., महोदयाः तथा इतराधिकारिणश्च।



दि.३१-१२-२०२१, ति.ति.दे.पक्षतः षट्पुटात्मकविशिष्टदिनसूचिकायाः (3D) आविष्करणे ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री के.एस्.जवहर् रेड्डि, ऐ.ए.एस्., ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मारेड्डि, ऐ.डि.इ.यस्., ति.ति.दे. तिरुपति सहकार्यनिर्वहणाधिकारिणः श्री वीरब्रह्मम्, ऐ.ए.एस्., महोदयाः तथा इतराधिकारिणश्च।



# अलमेलुमंगा

तेलुगुमूलम् - श्री जूलकण्टि बालसुब्रह्मण्यम्
संस्कृतानुवादः - डा।। एम्.प्रफुल्ला
चरवाणी - ९४४०२८५९८५

## आदित्यप्रतिष्ठापकः आदिदेवः

पद्मसरसः पूर्वदिशि पश्चिमाभिमुखेन सूर्यस्यालयो वर्तते। तमादित्यं प्रतिष्ठाप्य तत्रैव श्रीवेङ्कटेशः पद्मावत्यै तपश्चकार १२ वर्षाणि यावत्। तस्मिन्नेव सरसि कनकपद्मे सा लक्ष्मीः आविर्भूता।

अयमालयः अनेकवारं पुनरुद्धारं प्राप्तः। २३-०४-१८६६ दिने हाथीराम् मठीयाः जीर्णोद्धारं चक्रुः। तत्रैव केवलं वैखानसागममनुसृत्य पूजाः कुर्वन्ति। रविवासरे, हस्तानक्षत्रे, रथसप्तम्यां च स्वामिनः अभिषेकानन्तरं ग्रामोत्सवः आचर्यते। अत एव इदं तिरुचानूरु क्षेत्रं भास्करक्षेत्रमिति प्रसिद्धम्।

तिरुचान इति शब्दस्य दिव्यकान्ता इत्यर्थः। केचित् तां अलमेलुमंगा इति नाम्नापि व्यवहरन्ति। सहस्रदलपद्मोद्भवात् सा पद्मावती इति विख्याता।

आनन्दनिलयस्य साम्राज्ञी अर्चामूर्तिरूपेण सुप्रतिष्ठिता यत्र तत् दिव्यक्षेत्रं तिरुचानूरु। एतत् क्षेत्रं 'अलमेलुमंगपट्टणं' इत्यपि जनानां सुपरिचितम्। पुरा अस्मिन् प्रदेशे शुकाश्रमः आसीदिति कथयन्ति। अतः एतत् क्षेत्रं 'श्रीशुकनूरु' इत्यपि व्यवहृतम्। कालक्रमेण एतत् 'तिरुशुकनूरु', 'तिरुच्चुकनूरु', 'तिरुचानूरु' इति शब्दपरिणामं प्राप्तम् इति परिशोधकानां मतम्। अत्र ग्राममध्ये पद्मसरोवरनामकतटाकः आसीत्। अस्मिन् तटाके सुवर्णपुष्पे अलमेलुमंगा समुद्भूता।

वैकुण्ठात् विनिर्गतां महालक्ष्मीं अन्विष्यमाणः श्री महाविष्णुः कोल्हापुरक्षेत्रे तपः कृतवान्। 'अहमत्र तुभ्यम् दर्शनं न ददामीति, पद्मसरस्तीरे तव वाञ्छा सफलतां याति इति अशरीरवाणीं श्रुत्वा नारायणः शुकमहर्षेः आश्रमे पद्मसरोवरं कल्पयित्वा तस्य तीरे द्वादशवर्षाणि तपः चकार।

कार्तिकमासे शुक्लपक्षे पञ्चम्यां उत्तराषाढानक्षत्रे पद्मसरसि सहस्रदलपद्मे षोडशवर्षीया युवती आविर्भूता। सर्वे देवाः, ऋषयः, योगिनः तां जगन्मातरं बहुविधैः स्तोत्रैः अस्तुवन्। महाविष्णुः तां व्यूहलक्ष्मीरूपेण हृदये निक्षिप्य तिरुमलक्षेत्रे श्रीनिवासनाम्ना सुस्थिरः अभवत्। ब्रह्मादीनां प्रार्थनानुसारं पद्मसरस्तीरे महालक्ष्मीः स्वाधीना सती **विरहलक्ष्मीः, वीरलक्ष्मीः** इति नाम्ना पूजिता, भक्तान् अनुगृह्णामीति अवदत्। तिरुचानूरु क्षेत्रे देव्याः दर्शनं,

## शुक्रवारीयोद्यानोत्सवः

**श्रीदेव्याः आलयस्य दक्षिणदिशि समीपे सुन्दरमुद्यानवनमस्ति। तदेव ''शुक्रवारपु तोट'' इति कथ्यते। कदल्याद्यनेकवृक्षपुष्पादिसम्पत्भिः युते वने १६ स्तम्भैः निर्मितः 'वसन्तमण्टपः' वर्तते। प्रतिभृगुवासरं मध्याह्ने तत्रागतायाः देव्याः मङ्गलद्रव्यैः तिरुमञ्जनमाचरन्ति। तदनु सम्यगलङ्कृता सा सवैभवं आस्थानमण्डपे 'सहस्रदीपालङ्करणसेवायां' भक्तान् आनन्दयति।**

अभीष्टनिवेदनं श्रेयोदायकमिति, तेन यात्रापि सफलातां यातीति जनानां विश्वासः।

तिरुचानूरु क्षेत्रे देवी पद्मासनस्था अभयवरदहस्ता च दृश्यते। सदयं उपविश्य भक्तानां प्रार्थनाः, कामान् च सावकाशं, क्षान्त्या श्रुत्वा तान् सर्वान् व्यूहलक्ष्मीरुपेण श्रीनिवासाय विज्ञापयति, अपि च भक्तेभ्यः वरदानाय प्रब्रूते। सः अपि तस्याः तान् आदेशान् अङ्गीकृत्य भक्तेभ्यः वरान् दत्वा **वरदरायः** इति सार्थकनामकः अभवत्।

पुरा श्रीनिवासः, पद्मावती उभावपि समानस्तरे अवसतः इति, पद्मावती तस्याः दयागुणभारात् अधः गता इति, अत एव श्रीनिवासः उन्नतगिरिशिखरोपरि, पद्मावती भूतले वसतः इति पण्डितोक्तिः श्रूयते। अनेन देव्याः अतिशयितदयागुणः सुस्पष्टः।

पाञ्चरात्रागमानुसारं सुप्रभातसेवा, सहस्रनामार्चना, परिणयोत्सवः, सहस्रदीपालङ्करणसेवा, पुष्पाञ्जलिः इत्यादिवारोत्सवाः, वैशाखपौर्णिमायां वसन्तोत्सवः, ज्येष्ठमासे उडुपोत्सवः, भाद्रपदमासे पवित्रोत्सवाः, कार्तिकमासे लक्षकुंकुमार्चना, ब्रह्मोत्सवः, पुष्पयागः इत्यादिमासोत्सवाः अत्यन्तवैभवेन क्रियन्ते।



ब्रह्मोत्सवाः

प्रतिसंवत्सरं कार्तिकमासे शुक्लपञ्चम्यां, देव्याः अवतरणदिनोत्सवं पुरस्कृत्य अंकुरार्पणादारभ्य पञ्चमीतीर्थ - पर्यन्तं दशदिनानि ब्रह्मोत्सवाः आचर्यन्ते। प्रथमदिनादारभ्य समाप्तिपर्यन्तं प्रतिदिनं सायं प्रातः विविधवाहनसेवाः आचरिताः भवन्ति।















## महासम्राज्ञ्यै ल्पवोत्सवाः

प्रतिवत्सरं ज्येष्ठमासीयपौर्णमासीपर्यन्तं पञ्चदिनानि यावत् सायं पद्मसरसि प्रथमे श्रीकृष्णः, द्वितीये श्रीभूसमेतसुन्दरराजस्वामी, अन्तिमत्रिषु दिवसेषु श्री पद्मावतीदेवी च प्लवे विहरन्ति।

नागदोषनिवारिणी, सन्तानदात्री देवी बृहत् शेषवाहने- लघुशेषवाहने, विद्यालक्ष्मीरूपेण हंसवाहने, संपत्लक्ष्मीरूपेण कल्पवृक्षवाहने, त्रेतायुगीनां सीतादेवीं स्मारयन्ती हनुमद्वाहने, धनलक्ष्मीरूपेण शिबिकायां, गजलक्ष्मीरूपेण गजवाहने, स्वयं ब्रह्माण्डनायकीति स्मारयितुं सर्वभूपालवाहने, विजयलक्ष्मीरूपेण गरुडवाहने, आदिलक्ष्मीरूपेण सूर्यप्रभवाहने, साम्राज्यलक्ष्मीरूपेण चन्द्रप्रभवाहने, समापनदिने अश्ववाहने भवभयहारिणीरूपेण सर्वलोकसम्राज्ञी अलमेलुमंगा ब्रह्मोत्सवेषु विहरति।

पञ्चमीतीर्थं

समापनदिने भूलोकावतरणदिनोत्सवे कार्तिकशुक्लपञ्चम्यां देव्यै महासम्राज्ञ्यै अलमेलुमंगायै जन्मदिनोत्सवोपायनं - हरिद्राकुंकुमचन्दनसहितशाटिकां, कञ्चुकं, तुलसीप्रसादं च श्रीनिवासः तिरुमलक्षेत्रात् प्रेषयति। एतत् सर्वं सोपानमार्गेण तिरुपतिक्षेत्रं, ततः गजवाहने तिरुचानूरु क्षेत्रं आनीयते। उपायनसमर्पणानन्तरं तिरुमंजनकार्यक्रमः संप्रवर्तते।

तिरुमलेशपद्मावत्योः संबन्धः चन्द्रचन्द्रिकयोरिव, सूर्यसूर्यकिरणयोरिव, अग्नि-उष्णयोरिव अविनाभावः। सर्वे वयं अलमेलुमंगासमेतश्रीनिवासमित्थं प्रार्थयामः -

## अलमेलुमङ्गायै आनन्दनिलयस्य गौरवः

श्रीदेव्याः अवतारदिने पञ्चम्यां स्वप्रियायै कनकाभरणवस्त्रादीन् प्रेषयति तिरुमलेशः। अधिकारिणः तत्सर्वं स्वामिने तिरुमलक्षेत्रे निवेद्य पद्भ्यां अलिपिरिस्थं 'पसुपुमण्टपं' आगत्य, ततः विविधवाद्यैः साकं करिराजस्य उपरि स्थापयित्वा तिरुपतिस्थ श्री कोदण्डरामालय-श्रीगोविन्दराजस्वामिनः आलयपथा तिरुचानूरु प्राप्नुवन्ति।

तत्र अर्चकाः अधिकारिणश्च तानाभरणादीनां दिव्यमङ्गलनीराजनेन स्वागतं व्याहृत्य पुरवीथिषु उत्सवरूपेण नीत्वा देव्यै अर्पयन्ति। तेभ्यः श्रीदेव्याः, श्रीसुदर्शनचक्रत्ताळ्वार् स्वामिनः अपि पद्मसरोवरमण्टपे तिरुमञ्जनादिकं सवैभवं निरुद्वा, तदनु मुहूर्तवेलायां श्रीसुदर्शनभगवतः सरसि चक्रस्नानं कारयन्ति। तदैव चक्रेण साकं सहस्राधिकाः भक्ताः पवित्रस्नानमाचरन्ति च।

**नारायणस्य हृदये भवती यथास्ते**
**नारायणोऽपि तव हृत्कमले यथास्ते।**
**नारायणस्त्वमपि नित्यमुभौ तथैव**
**तौ तिष्ठतां हृदि ममापि दयावती श्रीः॥**

यथा पद्मावती नारायणस्य हृदये, नारायणः पद्मावतीहृत्कमले वसतः तथैव तावुभौ मम हृदये सुस्थिरं निवसताम् इति।

**कल्याणी कमले कान्ते कल्याणपुरनायिके।**
**कारुण्यकल्पलतिके पद्मावति नमोऽस्तु ते॥**
**सहस्रदलपद्मस्थे कोटिचन्द्रनिभानने।**
**पद्मपत्रविशालाक्षी पद्मावति नमोऽस्तु ते॥**

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - वि.गिरीशकुमारः
चरवाणी - ९९८९६५७५७६



(तदनन्तरम्)

एवं मध्यस्तरीयानामपि एषा श्रीमद्भगवद्गीता उपयोगाय भवतीति सूचितम्। धृतराष्ट्रस्तु उन्नतस्तरीयः राजा। तस्यापि एषा उपयोगिका इति सूचनात् सर्वेषामपि साहायिका इति सूचितम्।

पूर्वोक्तप्रकारेण वयमपि यत्र कुत्रापि एकस्मिन् स्तरे अन्तर्भवामः। किन्तु कस्मिन् स्तरे प्रवेशः उचितः इति चिन्तनीयः। तत्र अर्जुनस्य स्थाने प्रवेष्टुं यत्नः विधेयः। यतो हि परमात्मना साक्षात् उपदेशं प्राप्तुं अवकाशः सृष्ट्यादौ मरीच्यादीनां प्रजापतीनां तथा सनकादीनाञ्च लब्धः। तदनु सः अवकाशः अर्जुनस्यैव लब्धः। अतः अस्माभिरपि तदर्थमेव प्रयत्नः करणीयः। प्रकृते अस्मान्प्रति उपदेष्टुं स परमात्मा न अवतरति। अतः तस्य अर्चावतारेण सङ्कल्पमूलकं प्राप्तुं प्रयतन्तः जीवनं सार्थकं कुर्मः।

केवलं एते महाराजाः एव उपदेशे योग्याः वा? अन्येषां तादृशी योग्यता नास्ति वा? अन्ये जनाः भगवतः अनुग्रहप्राप्त्यै अनर्हाः वा? इति चेत् बहवः महाराजाः वीराः अत्र परमात्मनः अनुग्रहभाजः सन्ति। परमात्मनः अनुग्रहप्राप्त्यर्थं स्वकर्तव्याचारणं करणीयम्। स्वकर्तव्याचरणं परिपूर्णतया कर्तुं सङ्कल्पिताः भवेयुः। तेष्वेव परमात्मनः अनुग्रहः सम्पूर्णतया भवति।

श्रीमद्भगवद्गीतायां श्रीकृष्णः केषाञ्चन नामानि निर्दिष्टवान्। तेन परमात्मनः तेषु अनुग्रहः अस्तीति सूचितवान्। परन्तु तेषां नामानि साक्षात् श्रीकृष्णः न उक्तवान्, अपि तु दुर्योधनात् सूचितवान्। यान् दुर्योधनः निन्दति, तेषु दुर्योधनस्य कियान् द्वेषः वर्तते, सज्जनद्वेषात् किं फलं प्राप्यते इति ज्ञापयितुं दुर्योधनवचोभिः सूचयामास। तादृशसत्पुरुषाणां नामानि वक्ष्यमाणश्लोकेषु स्वीक्रियन्ते। चतुर्थश्लोके दुर्योधनः गुरून् द्रोणाचार्यान् तथा कांश्चन वीरान् च निन्दयन् एवं वदति -

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः॥ इति।

पाण्डवानां पक्षे बहवः वीराः, शूराश्च सन्ति। ते च महत्तरैः धनुभिः शोभायमानाः सन्ति। सर्वेऽपि भीमार्जुनसमानाः सन्ति। तेषु युयुधानः, विराटः, द्रुपदादयः सन्ति। अत्र दुर्योधनस्य किं मात्सर्यं दृश्यते इति चेत् - तत्र "युयुधानः" इति पदेन युद्धे विशारदः इत्यर्थो लभ्यते। स च नाम कृष्णस्य भ्रातृप्रायस्य सात्यकिमहाराजस्य वर्तते। स च यादवराजः। कुतः यादवानां नाम गृहीतवान्? नाम, आदौ पाण्डवानां विषये वक्तव्यं चेत् अर्जुनस्यैव वक्तव्यम् खलु!

(अनुवर्तिष्यते)

नीतिकथा

# यत्नेनैव हि सिद्ध्यति

- श्री विश्वजित् कुमार् रहि
चरवाणी - ९५६६१३२६३५



वंगप्रदेशे बोपदेव इति नामधेयकः एकः मन्दमतिः छात्रः अवसत्। सः यत् पठति तद् विस्मरति। परीक्षासु साफल्यं न भजति। स्वस्य सहपाठिनः तम् उपहसन्ति स्म। गुरवः तं मूर्खं मत्वा तिरस्कुर्वन्ति स्म।

एकदा गुरुजनेन निर्भर्त्सितः असौ विद्याालयात् निष्क्रान्तः। आत्मग्लानिपीडितः स मार्गे अचिन्तयत्, ‘नूनम् अहम् मूर्खः अस्मि, अत एव सर्वे माम् उपहसन्ति। मम भाग्ये विद्या नास्ति। सम्प्रति पठनं परिहाय किं करिष्यामि?’ इति चिन्तयन् निरुद्देश्यं यत्र तत्र भ्रमति स्म।

मार्गे तेनैकः कूपः दृष्टः। तत्र काश्चन नार्यः स्वघटान् जलेन पूरयन्ति स्म। सोऽपि औत्सुक्यात् तत्र स्थितः। रज्ज्वा कूपात् जलनिष्कासनक्रियाम् उत्सुको भूत्वा व्यलोकयत्।

अत्रान्तरे एका ललना जलेन घटं सम्पूर्य घटम् उत्थापितवती। वोपदेवः विस्मितो भूत्वा पश्यति यत्, यस्मिन् शिलाखण्डे घटः निहितः आसीत्, तत्र एकः गर्तः वर्तते। सः तां स्त्रियं अपृच्छत्- मातः! इमं सुन्दरं गर्तं कः निर्मितवान्? सा विहस्य प्रत्यवदत् “गर्तः एषः प्रतिदिनं घटस्थापनेन निर्मितः अभवत्, न कश्चित् अस्य रचयिता” इत्यक्त्वा सा घटम् आदाय प्रचलिता।

बोपदेवः तद्वचः निशम्य विचारमग्नः जातः। यदि भूयोभूयः मृण्मयघटस्य स्थापनेन पाषाणशिलायां गर्तः सम्पद्यते तदा पुनः पुनः पठनेन मम मतिः कथं निशिता न भवेत्? इति विचार्य सः पुनः विद्यालये प्रवेशम् अलभत।

विद्याप्राप्त्यै कृतनिश्चयः वोपदेवः गुरुजनेन पाठितान् विषयान् मनोयोगेन शुश्राव। पुनः पुनः पाठान् पठित्वा तेषां मननं चकार, लेखाभ्यासेन च परीक्षासु अपेक्षितं कौशलम् आससाद।

एवं शनैः तस्य बुद्धिः विकासम् आपेदे। गूढविषया अपि हस्तामलकवत् स्पष्टाः जाताः। परीक्षासु विशिष्टं स्थानम् आप्त्वा न केवलम् असौ गुरूणां स्नेहभाजनं जातः अपितु सहपाठिनां समादरपात्रम् अभवत्।

कालान्तरे पण्डितप्रवरेषु तस्य गणना व्यधीयत।

“असाध्यं किं प्रयत्नेन?”



# कल्याणवेङ्कटेश्वरः

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसीप्रसादः
संस्कृतानुवादः - कुमारी के. श्रावणी रेड्डि
चरवाणी - ७०३६२३५२४९

1 आकाशराजः स्वपुत्रीं पद्मावतीं नारायणवने वेङ्कटेश्वराय दत्वा वैभवेन विवाहोत्सवं कारितवान्। पश्चात् आकाशराजः जामातरं ब्रवीति...

2 भोः! नूतनवधूवराभ्यां विवाहवस्त्रेषु एव अवनाक्षीमातुः दर्शनं करणीयम् इति अत्र सम्प्रदायः।

3 अस्तु श्वशुर!

4 वधूवरौ सपरिवारं मातृदर्शनं कृतवन्तौ। वेङ्कटेश्वरः....

5 आवाम् द्वावपि शेषाचलं गच्छावः श्वशुर!

6 नृपदम्पती जामात्रा सह...

7 मम पुत्री प्रेम्णा लालिता.... आदरेण पश्यन्ति खलु!

8 भवन्तः दुःखं मा अनुभवन्तु। मम प्राणः, मम जीवः एषा पद्मा।

9 कल्याणवेङ्कटेश्वरः पद्मावत्या सह रथमारुह्य शेषाचलं गच्छन् मार्गमध्ये...

10 पद्मे! अयं अगस्त्यमहर्षेः आश्रमः। एनं सन्दृश्य गमिष्यावः।

11 अस्तु स्वामिन्!

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्।

12 उभावपि अगस्त्यं नमस्कृतवन्तौ। पश्चात् महर्षिः ताभ्याम् आशीः प्रदाय....

13 श्रीनिवास! वधूवरौ प्रायशः षण्मासकालं यावत् तीर्थक्षेत्रदर्शनाय नार्हौ।

14 इत्युक्ते...

15 भवन्तौ द्वावपि शेषाचलं प्रति मा गच्छेताम्।

16 अस्तु...

17 भवन्तौ मासषट्कं यावत् मदाश्रमे वासं कुरुताम्।

18 अस्तु...

19 आश्रमे तिष्ठन्तौ नद्याः कल्याण्यास्तीरे स्थितग्रामसौन्दर्यम् अवलोकयन्तौ विहरन्तौ अर्धवत्सरं तौ द्वौ यापितवन्तौ।

20 पद्मे शेषाचलं गच्छावः। 'शेषाचलं प्रति आगन्तुमशक्ताः भक्ताः अत्र मां द्रष्टुं शक्नुवन्ति।'

21 नाथ! एतद् वरम्।

22 'अविवाहितानां विवाहः मद्दर्शनेन सम्भविष्यति' एतद् द्वितीयं वरं मम पद्मे!!

23 तौ दम्पती सोपानमार्गेण शेषचलं गतवन्तौ। तानि सोपानान्येव श्रीनिवाससोपानानि श्रीवारिमेट्लु इति भाविनि सम्भूतानि। ताभ्यां विहृतग्रामः श्रीनिवासमंगापुरं नाम्ना प्रथितः अभूत्। तथैव श्रीनिवासोऽपि कल्याणवेङ्कटेश्वर इति नाम्ना प्रसिद्धो अभूत्।

सर्वे जनाः सुखिनो भवन्तु

स्वस्ति



अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?






## रसप्रश्नाः

१. वाल्मीकिरामायणं कस्मिन् छन्दसि वर्तते?

अ. गायत्री आ. उष्णिक् इ. अनुष्टुप् ई. बृहती

२.रामायणं केन युगेन सम्बद्धम्?

अ. कृतयुगेन आ.त्रेतायुगेन इ. द्वापरयुगेन ई. कलियुगेन

३.रामायणस्य प्रथमकाण्डम् किम्?

अ. उत्तरकाण्डम् आ.बालकाण्डम् इ. युद्धकाण्डम् ई. अरण्यकाण्डम्

४. रामायणे बृहत्तमं काण्डं किम्?

अ. उत्तरकाण्डम् आ.बालकाण्डम् इ. युद्धकाण्डम् ई. अरण्यकाण्डम्

समाधानानि - १.इ, २. आ, ३. आ, ४. इ






समाधानानि - विहङ्गः, स्त्रियः कर्णाभरणम्, मध्ये पुरुषः, पुरुषस्य तिलकम्, बालिकयाः वस्त्रम्, पुरुषस्य उत्तरीयम्, बालस्य कटिवस्त्रम्


Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



तिरुमलतिरुपतिदेवस्थानानि

# तिरुपतिस्थ
# श्रीकपिलेश्वरस्वामिनः
# ब्रह्मोत्सवः

२०२२, फिब्रवरी २१ फिब्रवरि तः मार्च् ०३ पर्यन्तम्

**२१-०२-२०२२ इन्दुवासरः**

रात्रौ - मूषकवाहने विनायकस्वामी,
अङ्कुरार्पणम्

**२२-०२-२०२२ भौमवासरः**

प्रातः - पल्यङ्कोत्सवः,
ध्वजारोहणम्

रात्रौ - हंसवाहनम्

**२३-०२-२०२२ सौम्यवासरः**

प्रातः - सूर्यप्रभवाहनम्

रात्रौ - चन्द्रप्रभवाहनम्

**२४-०२-२०२२ बृहस्पतिवासरः**

प्रातः - भूतवाहनम्

रात्रौ - सिंहवाहनम्

**२५-०२-२०२२ भृगुवासरः**

प्रातः - मकरवाहनम्

रात्रौ - शेषवाहनम्

**२६-०२-२०२२ मन्दवासरः**

प्रातः - अधिकारनन्दिवाहनम्

रात्रौ - तिरुच्चि उत्सवः

**२७-०२-२०२२ भानुवासरः**

प्रातः - व्याघ्रवाहनम्

रात्रौ - गजवाहनम्



**२८-०२-२०२२ इन्दुवासरः**

प्रातः - कल्पवृक्षवाहनम्

रात्रौ - तिरुच्चि उत्सवः

**०१-०३-२०२२ भौमवासरः**

प्रातः - रथोत्सवः

रात्रौ - नन्दिवाहनम्,
महाशिवरात्रिः



**०२-०३-२०२२ सौम्यवासरः**

प्रातः - पुरुषामृगवाहनम्

रात्रौ - कल्याणोत्सवः
अश्ववाहनम्

**०३-०३-२०२२ बृहस्पतिवासरः**

प्रातः - सूर्यप्रभवाहने
नटराजस्वामिनः
त्रिशूलस्नानम्

रात्रौ - ध्वजावरोहणम्,
रावणासुरवाहनम्



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-01-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

श्रीनिवासमङ्गापुरस्थ

# श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

२०२२ फिब्रवरी १९ तः २८ पर्यन्तम्